श्री भार्गव मुनिभिः अनुगृहीतं

# ॥ श्रीलक्ष्मीनारायण हृदयं ॥

## ॥ श्रीनारायण हृदयं ॥

॥ हरिः ओं ॥
अस्य श्री नारायण हृदय स्तोत्र महामंत्रस्य ।
भार्गव ऋषिः ।
अनुष्टुप् छंदः ।
लक्ष्मी नारायणो देवता ।
नारायण प्रीत्यर्थे जपे विनियोगः ॥

कर न्यासः

नारायणः परं ज्योतिरिति अंगुष्ठाभ्यां नमः ।
नारायणः परं ब्रह्मेति तर्जनीभ्यां नमः ।
नारायणः परो देव इति मध्यमाभ्यां नमः।
नारायणः परं धामेति अनामिकाभ्यां नमः ।
नारायणः परो धर्म इति कनिष्ठिकाभ्यां नमः ।
विश्वं नारायण इति करतल करपृष्ठाभ्यां नमः ।

अंग न्यासः

नारायणः परं ज्योतिरिति हृदयाय नमः ।
नारायणं परं ब्रह्मेति शिरसे स्वाहा ।
नारायणः परो देव इति शिखायै वौषट् ।

नारायणः परं धामेति कवचाय हुम् ।
नारायणः परो धर्म इति नेत्राभ्यां वौषट् ।
विश्वं नारायण इति अस्त्राय फट् ।
भूर्भुवः सुवरोमिति दिग्बंधः ॥

ध्यानं

उद्यदादित्य संकाशं पीतवासं चतुर्भुजं ।
शंखचक्रगदा पाणिं ध्यायेत् लक्ष्मीपतिं हरिं ॥ १ ॥

त्रैलोक्याधार चक्रं तदुपरि कमठं तत्र च अनंतभोगी
तन्मध्ये भूमि पद्मांकुश शिखर दळं कर्णिका भूत मेरुम् ।
तत्रत्यं शांत मूर्तिं मणिमय मकुटं कुंडलोद्भासितांगं
लक्ष्मीनारायणाख्यं सरसिज नयनं संततं चिंतयामः ॥ २ ॥

अस्य श्रीनारायण हृदय स्तोत्र महामंत्रस्य ।
ब्रह्मा ऋषिः ।
अनुष्टुप् छंदः ।
नारायणो देवता ।
नारायण प्रीत्यर्थे जपे विनियोगः ॥

ओं
नारायणः परं ज्योतिरात्मा नारायणः परः ।
नारायण परं ब्रह्म नारायण नमोऽस्तुते ॥ १ ॥

नारायणः परो देवो धाता नारायणः परः ।
नारायणः परो धाता नारायण नमोऽस्तुते ॥ २ ॥

नारायण परं धाम ध्यानं नारायणः परः ।
नारायण परो धर्मो नारायण नमोऽस्तुते ॥ ३ ॥

नारायणः परो देवो विद्या नारायणः परः ।
विश्वं नारायणः साक्षात् नारायण नमोऽस्तुते ॥ ४ ॥

नारायणाद् विधिर्जातो जातो नारायणाद् भवः ।
जातो नारायणाद् इंद्रो नारायण नमोऽस्तुते ॥ ५ ॥

रविर्नारायणस्तेजः चंद्रो नारायणो महः ।
वह्निर्नारायण साक्षात् नारायण नमोऽस्तुते ॥ ६ ॥

नारायण उपास्यः स्याद् गुरुर्नारायणः परः ।
नारायणः परो बोधो नारायण नमोऽस्तुते ॥ ७ ॥

नारायण फलं मुख्यं सिद्धिर्नारायणः सुखं ।
हरिर्नारायणः शुद्धिर्नारायण नमोऽस्तुते ॥ ८ ॥

निगमावेदित अनंत कल्याण गुण वारिधे ।
नारायण नमस्तेऽस्तु नरकार्णव तारक ॥ ९ ॥

जन्म मृत्यु जरा व्याधि पार तंत्र्यादिभिः सदा ।
दोषैरस्पृष्ट रूपाय नारायण नमोऽस्तुते ॥ १० ॥

वेद शास्त्रार्थ विज्ञान साध्य भक्त्येक गोचर ।
नारायण नमस्तेऽस्तु मामुद्धर भवार्णवात् ॥ ११ ॥

नित्यानंद महोदार परात्पर जगत्पते ।
नारायण नमस्तेऽस्तु मोक्ष साम्राज्य दायिने ॥ १२ ॥

आब्रह्म स्तंब पर्यंतं अखिलात्म महाश्रय ।
सर्व भूतात्म भूतात्मन् नारायण नमोऽस्तुते ॥ १३ ॥

पालिताशेश लोकाय पुण्यश्रवण कीर्तन ।
नारायण नमस्तेऽस्तु प्रळयोदक शायिने ॥ १४ ॥

निरस्त सर्वदोषाय भक्त्यादि गुणदायिने ।
नारायण नमस्तेऽस्तु त्वां विना न हि मे गतिः ॥ १५ ॥

धर्मार्थ काम मोक्षाख्य पुरुषार्थ प्रदायिने ।
नारायण नमस्तेऽस्तु पुनस्तेऽस्तु नमो नमः ॥ १६ ॥

अथ प्रार्थना

नारायण त्वमेवासि दहराख्ये हृदि स्थितः ।
प्रेरिता प्रेर्यमाणानां त्वया प्रेरित मानसः ॥ १७ ॥

त्वदाज्ञां शिरसा कृत्वा भजामि जनपावनं ।
नानोपासन मार्गाणां भवकृद्भावबोधकः ॥ १८ ॥

भावार्थ कृद्भवातीतो भव सौख्यप्रदो मम ।
त्वन् माया मोहितं विश्वं त्वयैव परिकल्पितं ॥ १९ ॥

त्वद् अधिष्ठान मात्रेण सा वै सर्वार्थ कारिणी ।
त्वमेव तां पुरस्कृत्य मम कामान् समर्थय ॥ २० ॥

न मे त्वदन्यस्त्रातास्ति त्वदन्यन्न हि दैवतं ।
त्वदन्यं नहि जानामि पालकं पुण्य वर्धनं ॥ २१ ॥

यावत् सांसारिको भावो मनस्थो भावनात्मकः ।
तावत् सिद्धिर्भवेत् साध्या सर्वदा सर्वदा विभो ॥ २२ ॥

पापिनां अहमेकाग्रो दयाळूनां त्वमग्रणीः ।
दयनीयो मदन्योऽस्ति तव कोऽत्र जगत्त्रये ॥ २३ ॥

त्वयाहं नैव सृष्टश्चेत् न स्यात्तव दयाळुता ।
आमयो वा न सृष्टश्चेत् औषधस्य वृथोदयः ॥ २४ ॥

पापसंग परिश्रांतः पापात्मा पापरूपधृक् ।
त्वदन्यः कोऽत्र पापेभ्यः त्रातास्ति जगतीतले ॥ २५ ॥

त्वमेव माता च पिता त्वमेव
त्वमेव बंधुश्च सखा त्वमेव ।
त्वमेव सेव्यश्च गुरुस्त्वमेव
त्वमेव सर्वं मम देव देव ॥ २६ ॥

प्रार्थना दशकं चैव मूलाष्टक मतः परं ।
यः पठेत् शृणुयान् नित्यं तस्य लक्ष्मीः स्थिरा भवेत् ॥ २७ ॥

नारायणस्य हृदयं सर्वाभीष्ट फलप्रदं ।
लक्ष्मी हृदयकं स्तोत्रं यदि चैतद्विनाकृतं ॥ २८ ॥

तत्सर्वं निश्फलं प्रोक्तं लक्ष्मीः कृध्यति सर्वदा ।
एतत् संकलितं स्तोत्रं सर्वाभीष्ट फलप्रदं ॥ २९ ॥

जपेत् संकलितं कृत्वा सर्व अभीष्टं अवाप्नुयात् ।
नारायणस्य हृदयमादौ जप्त्वा ततः परं ॥ ३० ॥

लक्ष्मी हृदयकं स्तोत्रं जपेन्नारायणं पुनः ।
पुनर्नारायणं जप्त्वा पुनर्लक्ष्मी नुतिं जपेत् ॥ ३१ ॥

तद्वद्धोमादिकं कुर्यात् एतत् संकलितं शुभं ।
एवं मध्ये द्विवारेण जपेत् संकलित शुभं ॥ ३२ ॥

लक्ष्मी हृदयके स्तोत्रे सर्वमन्यत् प्रकाशितं ।
सर्वान् कामानवाप्नोति आधि व्याधि भयं हरेत् ॥ ३३ ॥

गोप्यमेतत् सदा कुर्यात् न सर्वत्र प्रकाशयेत् ।
इति गुह्यतमं शास्त्रं प्रोक्त ब्रह्मादिभिः पुरा ॥ ३४ ॥

लक्ष्मी हृदय प्रोक्तेन विधिना साधयेत् सुधीः ।
तस्मात्सर्व प्रयत्नेन साधयेत् गोपयेत् सुधीः ॥ ३५ ॥

यत्रैतत् पुस्तकं तिष्ठेत् लक्ष्मी नारायणात्मकं ।
भूत पैशाच वेताळ भयं नैव तु सर्वदा ॥। ३६ ॥

भृगुवारे तथा रात्रौ पूजयेत् पुस्तक द्वयं ।
सर्वदा सर्वदा स्तुत्यं गोपयेत् साधयेत् सुधीः ।
गोपनात् साधनाल्लोके धन्यो भवति तत्त्वतः ॥ ३७ ॥

॥ इति श्रीनारायणहृदयं संपूर्णं ॥

## ॥ श्रीलक्ष्मी हृदयं ॥

॥ हरिः ओं ॥
अस्य श्री आद्यादि श्रीमहालक्ष्मी हृदय स्तोत्र महा मंत्रस्य ।
भार्गव ऋषिः ।
अनुष्टुपादि नाना छंदांसि ।
आद्यादि श्रीमहालक्ष्मी सहित नारायणो देवता ॥

श्रीं बीजं ह्रीं शक्तिः ऐं कीलकं
आद्यादि श्रीमहालक्ष्मी प्रसाद सिद्ध्यर्थे जपे विनियोगः ॥

॥ ओं ॥
आद्यादि श्रीमहालक्ष्मी देवतायै नमः
हृदये श्रीं बीजायै नमः
गुह्ये ह्रीं शक्त्यै नमः
पादयोः ऐं बलायै नमः
मूर्धादि पादपर्यंतं विन्यसेत् ॥

ओं श्रीं ह्रीं ऐं करतलकरपार्श्वयोः
श्रीं अंगुष्ठाभ्यां नमः
ह्रीं तर्जनीभ्यां नमः
ऐं मध्यमाभ्यां नमः
श्रीं अनामिकाभ्यां नमः
ह्रीं कनिष्ठिकाभ्यां नमः
ऐं करतल करपृष्ठाभ्यां नमः ॥

श्रीं हृदयाय नमः
ह्रीं शिरसे स्वाहा
ऐं शिखायै वौषट्
श्रीं कवचाय हुं
ह्रीं नेत्राभ्यां वौषट्
ऐं अस्त्राय फट्
भूर्भुवस्सुवरों इति दिग्बंधः ॥

अथ ध्यानं

हस्त द्वयेन कमले धारयंतीं स्वलीलया ।
हार नूपुर संयुक्तां महालक्ष्मीं विचिंतयेत् ॥ १ ॥

कौशेय पीतवसनामरविंद नेत्रां
पद्म द्वय अभय वरोद्यत पद्म हस्तां ।
उद्यच्छ तार्क सदृशां परमांक संस्थां
ध्यायेद् विधीशनत पाद युगां जनित्रीं ॥ २ ॥

श्रीलक्ष्मी कमलधारिण्यै सिंहवाहिन्यै स्वाहा ॥

पीतवस्त्रां सुवर्णांगीं पद्म हस्त द्वयान्वितां ।
लक्ष्मीं ध्यात्वेति मंत्रेण स भवेत् पृथिवीपतिः ॥ ३ ॥

मातुलुंग गदा खेटे पाणौ पात्रंच बिभ्रती ।
वाग लिंगंच मानंच बिभ्रती नृप मूर्धनि ॥ ४ ॥

॥ ओं श्रीं ह्रीं ऐं ॥

वंदे लक्ष्मीं परशिवमयीं शुद्ध जांबूनदाभां
तेजो रूपां कनक वसनां सर्व भूशोज्ज्वलांगीं ।
बीजा पूरं कनक कलशं हेम पद्मं दधानां
आद्यां शक्तिं सकल जननीं सर्व मांगल्य युक्तां ॥ १ ॥

श्रीमत् सौभाग्य जननीं स्तौमि लक्ष्मीं सनातनीं ।
सर्वकाम फलावाप्ति साधनैक सुखवहां ॥ २ ॥

स्मरामि नित्यं देवेशि त्वया प्रेरित मानसः ।
त्वदाज्ञां शिरसा धृत्वा भजामि परमेश्वरीं ॥ ३ ॥

समस्त संपत् सुखदां महाश्रियं
समस्त कल्याणकरीं महाश्रियं ।
समस्त सौभाग्य करीं महाश्रियं
भजाम्यहं ज्ञानकरीं महाश्रियं ॥ ४ ॥

विज्ञान संपत् सुखदां महाश्रियं
विचित्र वाग्भूतिकरीं मनोरमां ।
अनंत सौभाग्य सुख प्रदायिनीं
नमाम्यहं भूतिकरीं हरिप्रियां ॥ ५ ॥

समस्त भूतांतर संस्थिता त्वं
समस्त भक्तेश्वरि विश्वरूपे ।
तन्नास्ति यत् त्वद् व्यतिरिक्तवस्तु
त्वत् पाद पद्मं प्रणमाम्यहं श्रीः ॥ ६ ॥

दारिद्य दुःखौघ तमोनिहंत्रि
त्वत् पाद पद्मं मयि सन्निधत्स्व ।
दीनार्ति विच्छेदन हेतु भूतैः
कृपा कटाक्षैरभिशिंच मां श्रीः ॥ ७ ॥

विष्णु स्तुति परां लक्ष्मीं स्वर्ण वर्ण स्तुति प्रियां ।
वरदाभयदां देवीं वंदे त्वां कमलेक्षणे ॥ ८ ॥

अंब प्रसीद करुणा परिपूर्ण दृष्ट्या
मां त्वत् कृपा द्रविणगेहमिमं कुरुश्व ।
आलोकय प्रणत हृद्गत शोक हंत्रि
त्वत् पादपद्म युगळं प्रणमाम्यहं श्रीः ॥ ९ ॥

शांत्यै नमोऽस्तु शरणागत रक्षणायै
कांत्यै नमोऽस्तु कमनीय गुणाश्रयायै ।
क्षांत्यै नमोऽस्तु दुरितक्षय कारणायै
धात्र्यै नमोऽस्तु धन धान्य समृद्धिदायै ॥ १० ॥

शक्त्यै नमोऽस्तु शशि शेखर संस्थितायै
रत्यै नमोऽस्तु रजनीकर सोदरायै ।
भक्त्यै नमोऽस्तु भव सागर तारकायै
मत्यै नमोऽस्तु मधुसूदन वल्लभायै ॥ ११ ॥

लक्ष्म्यै नमोऽस्तु शुभ लक्षण लक्षितायै
सिद्ध्यै नमोऽस्तु सुर सिद्ध सुपूजितायै ।
धृत्यै नमोऽस्तु मम दुर्गति भंजनायै
गत्यै नमोऽस्तु वर सद्गति दायकायै ॥ १२ ॥

देव्यै नमोऽस्तु दिवि देव गणार्चितायै
भूत्यै नमोऽस्तु भुवनार्ति विनाशकायै ।
शांत्यै नमोऽस्तु धरणीधर वल्लभायै
पुष्ट्यै नमोऽस्तु पुरुशोत्तम वत्सलायै ॥ १३ ॥

सुतीव्र दारिद्र्य तमोपहंत्र्यै
नमोऽस्तु ते सर्व भयापहंत्र्यै ।
श्री विष्णुवक्षस्थळ संस्थितायै
नमो नमः सर्व विभूतिदायै ॥ १४ ॥

जयतु जयतु लक्ष्मीर्लक्षणालंकृतांगी
जयतु जयतु पद्मा पद्म सद्माभिवंद्या ।
जयतु जयतु विद्या विष्णु वामांक संस्था
जयतु जयतु सम्यक् सर्व संपत्करा श्रीः ॥ १५ ॥

जयतु जयतु देवी देव संघाभि पूज्या
जयतु जयतु भद्रा भार्गवी भाग्यरूपा ।
जयतु जयतु नित्या निर्मल ज्ञानवेद्या
जयतु जयतु सत्या सर्व भूतांतरस्था ॥ १६ ॥

जयतु जयतु रम्या रत्न गर्भांतरस्था
जयतु जयतु शुद्धा शुद्ध जांबूनदाभा ।
जयतु जयतु कांता कांति मद्भासितांगी
जयतु जयतु शांता शीघ्रमागच्छ सौम्ये ॥ १७ ॥

यस्याः कलायाः कमलोद्भवाद्या
रुद्राश्च शक्र प्रमुखाश्च देवाः ।
जीवंति सर्वेपि सशक्तयस्ते
प्रभुत्वमाप्ताः परमायुशस्ते ॥ १८ ॥

॥ मुखबीजं ॥

॥ ओं–ह्रां–ह्रीं–अं–आं–यं–दुं–लं–वं ॥

लिलेख निटिले विधिर्मम लिपिं विसृज्यांतरं
त्वया विलिखितव्यमेतदिति तत्फल प्राप्तये ।
तदंतिकफलस्फुटं कमलवासिनि श्रीरिमां
समर्पय समुद्रिकां सकलभाग्य संसूचिकां ॥ १९ ॥

॥ पादबीजं ॥

॥ ओं–अं–आं–ईं–एं–ऐं–कं–लं–रं ॥

कलया ते यथा देवि जीवंति सचराचराः ।
तथा संपत्करी लक्ष्मि सर्वदा संप्रसीद मे ॥ २० ॥

यथा विष्णुर्धृवं नित्यं स्वकलां सन्न्यवेशयत् ।
तथैव स्वकलां लक्ष्मि मयि सम्यक् समर्पय ॥ २१ ॥

सत्व सौख्य प्रदे देवि भक्तानां अभयप्रदे ।
अचलां कुरु यत्नेन कलां मयि निवेशितां ॥ २२ ॥

मुदास्तां मत्फाले परम पद लक्ष्मीः स्फुटकला
सदा वैकुंठ श्रीनिर्वसतु कला मे नयनयोः ।
वसेत्सत्ये लोके मम वचसि लक्ष्मीर्वरकला
श्रियश्श्वेत द्वीपे निवसतु कला मे स्वकरयोः ॥ २३ ॥

॥ नेत्रबीजं ॥

॥ ओं-घ्रां-घ्रीं-घ्रें-घ्रैं-घ्रों-घ्रौं-घ्रं-घ्रः ॥

तावन्नित्यं ममांगेशु क्षीराब्धौ श्रीकला वसेत् ।
सूर्याछंद्रमसौ यावत् तावल्लक्ष्मीपतिश्रियौ ॥ २४ ॥

सर्व मंगळ संपूर्णा सर्वैश्वर्य समन्विता ।
आद्यादि श्रीमहालक्ष्मीः त्वत्कला मयि तिश्ठतु ॥ २५ ॥

अज्ञान तिमिरं हंतुं शुद्ध ज्ञान प्रकाशिका ।
सर्वैश्वर्य प्रदा मेऽस्तु त्वत्कला मयि संस्थिता ॥ २६ ॥

अलक्ष्मीं हरतु क्षिप्रं तमस्सूर्यप्रभा यथा ।
वितनोतु मम श्रेयस्त्वत्कला मयि संस्थिता ॥ २७ ॥

ऐश्वर्य मंगळोत्पत्तिः त्वत् कलायां निधीयते ।
मयि तस्मात् कृतार्थोस्मि पात्रमस्मि स्थितेस्तव ॥ २८ ॥

भवदावेश भाग्यार्हो भाग्यवानस्मि भार्गवि ।
त्वत्प्रसादात्पवित्रोहं लोकमातर्नमोऽस्तुते ॥ २९ ॥

पुनासि मां त्वत्कलयैव यस्मात्
अतस्स्मागच्छ ममाग्रतस्त्वं ।
परं पदं श्रीर्भव सुप्रसन्ना
मय्यच्युतेन प्रविशादि लक्ष्मीः ॥ ३० ॥

श्रीवैकुंठस्थिते लक्ष्मि समागच्छ ममाग्रता ।
नारायणेन सह मां कृपा दृष्ट्याऽवलोकय ॥ ३१ ॥

सत्य लोक स्थिते लक्ष्मि त्वं ममागच्छ सन्निधिं ।
वासुदेवेन सहिता प्रसीद वरदा भव ॥ ३२ ॥

श्वेत द्वीप स्थिते लक्ष्मि शीघ्रमागच्छ सुव्रते ।
विष्णुना सहिता देवि जगन्मातः प्रसीद मे ॥ ३३ ॥

क्षीरांबुधि स्थिते लक्ष्मि समागच्छ समाधवे ।
त्वत्कृपादृष्टि सुधया सततं मां विलोकय ॥ ३४ ॥

रत्न गर्भ स्थिते लक्ष्मि परिपूर्ण हिरण्मयि ।
समागच्छ समागच्छ स्थित्वाऽशु पुरतो मम ॥ ३५ ॥

स्थिरा भव महालक्ष्मि निश्चला भव निर्मले ।
प्रसन्न कमले देवि प्रसन्न हृदया भव ॥ ३६ ॥

श्रीधरे श्रीमहालक्ष्मि त्वदंतस्थं महा निधिं ।
शीघ्रमुद्धृत्य पुरतः प्रदर्शय समर्पय ॥ ३७ ॥

वसुंधरे श्रीवसुदे वसुदोग्ध्रि कृपामयि ।
त्वत् कुक्षिगत सर्वस्वं शीघ्रं मे संप्रदर्शय ॥ ३८ ॥

विष्णुप्रिये रत्नगर्भे समस्तफलदे शिवे ।
त्वद् गर्भ गतहेमादीन् संप्रदर्शय दर्शय ॥ ३९ ॥

रसातलगते लक्ष्मि श्रीघ्रमागच्छ मे पुरः ।
न जाने परमं रूपं मातर्मे संप्रदर्शय ॥ ४० ॥

आविर्भव मनोवेगात् शीघ्रमागच्छ मे पुरः ।
मा वत्स भैरि हेत्युक्ता कामं गौरिव रक्ष मां ॥ ४१ ॥

देवि शीघ्रं ममागच्छ धरणीगर्भ संस्थिते ।
मातस्त्वद् भृत्य भृत्योहं मृगये त्वां कुतुहलात् ॥ ४२ ॥

उत्तिष्ठ जागृहि मयि समुत्तिष्ठ सृजागृहि ।
अक्षय्यान् हेम कलशान् सुवर्णेन सुपूरितान् ॥ ४३ ॥

निक्षेपान्मे समाकृश्य समुद्धृत्य ममाग्रतः ।
समुन्नतानना भूत्वा सम्यग्देहि धरातलात् ॥ ४४ ॥

मत्सन्निधिं समागच्छ मदाहित कृपारसा ।
प्रसीद श्रेयसां दोग्ध्री लक्ष्मीर्मे नयनाग्रतः ॥ ४५ ॥

अत्रोपविश्य लक्ष्मि त्वं स्थिरा भव हिरण्मयी ।
सुस्थिरा भव संप्रीत्या प्रसन्ना वरदा भव ॥ ४६ ॥

आनीतांस्तु त्वया देवि निधीन्वै संप्रदर्शय ।
अद्य क्षणेन सहसा दत्वा संरक्ष मां सदा ॥ ४७ ॥

मयि तिष्ठ तथा नित्यं यथेंद्रादिशु तिष्ठसि ।
अभयंकुरु मे देवि महालक्ष्मि नमोऽस्तुते ॥ ४८ ॥

समागच्छ महालक्ष्मि शुद्ध जांबून दस्थिते ।
प्रसीद पुरतः स्थित्वा प्रणतं मां विलोकय ॥ ४९ ॥

लक्ष्मीर्भुवंगता भासि यत्र यत्र हिरण्मयी ।
तत्र तत्र स्थिता त्वं मे तव रूपं प्रदर्शय ॥ ५० ॥

क्रीडंती बहुधा भूमौ परिपूर्णकृपा मयि ।
मम मूर्धानि ते हस्ताम विलंबित मर्पय ॥ ५१ ॥

फल भाग्योदये लक्ष्मि समस्त पुरवासिनि ।
प्रसीद मे महालक्ष्मि परिपूर्ण मनोरथे ॥ ५२ ॥

अयोध्यादिषु सर्वेषु नगरेषु समास्थिते ।
वैभवैर्विविधैर्युक्तैः समागच्छ मुदान्विते ॥ ५३ ॥

समागच्छ समागच्छ ममाग्रे भव सुस्थिरा ।
करुणारस निष्यंद नेत्रद्वय विलासिनि ॥ ५४ ॥

सन्निधत्स्व महालक्ष्मि त्वत्पाणिं मम मस्तके ।
करुणा सुधया मां त्वमभिषिच्य स्थिरं कुरु ॥ ५५ ॥

सर्व राजगृहे लक्ष्मि समागच्छ बलान्विते ।
स्थित्वाऽऽशु पुरतो मेऽद्य प्रसादेन भयं कुरु ॥ ५६ ॥

सादरं मस्तके हस्तं मम त्वं कृपयाऽर्पय ।
सर्वरजस्थिते लक्ष्मि त्वत्कला मयि तिष्ठतु ॥ ५७ ॥

आद्यादि श्रीमहालक्ष्मि विष्णु वामांक संस्थिते ।
प्रत्यक्षं कुरु मे रूपं रक्ष मां शरणागतं ॥ ५८ ॥

प्रसीद मे महालक्ष्मि सुप्रसीद महाशिवे ।
अचला भव सुप्रीता सुस्थिरा भव मद्गृहे ॥ ५९ ॥

यावत्तिष्ठंति वेदाश्च यावत्चंद्र दिवाकरौ ।
यावद् विष्णुश्च यावत्त्वं तावत्कुरु कृपां मयि ॥ ६० ॥

चांद्री कला यथा शुक्ले वर्धते सा दिने दिने ।
तथा दया ते मय्येव वर्धतामभिवर्धतां ॥ ६१ ॥

यथा वैकुंठ नगरे यथा वै क्षीरसागरे ।
तथा मद्भवने तिष्ठ स्थिरं श्रीविष्णुना सह ॥ ६२ ॥

योगिनां हृदये नित्यं यथा तिष्ठसि विष्णुना ।
तथा मद्भवने तिष्ठ स्थिरं श्रीविष्णुना सह ॥ ६३ ॥

नारायणस्य हृदये भवती यथास्ते
नारायणोऽपि तव हृत्कमले यथास्ते ।
नारायणस्त्वमपि नित्य विभू तथैव

तौ तिष्ठतां हृदि ममापि दयान्वितौ श्रीः ॥ ६४ ॥

विज्ञान वृद्धिं हृदये कुरु श्रीः
सौभाग्य वृद्धिं कुरु मे गृहे श्रीः ।
दया सुवृष्टिं कुरुतां मयि श्रीः
सुवर्ण वृष्टिं कुरु मे करे श्रीः ॥ ६५ ॥

न मां त्यजेथाः श्रित कल्पवल्लि
सद्भक्ति चिंतामणि कामधेनो ।
न मां त्यजेथा भव सुप्रसन्ने
गृहे कळत्रेषु च पुत्रवर्गे ॥ ६६ ॥

॥ कुक्षिबीजं ॥

॥ ओं–अं–आं–ईं–एं–ऐं ॥

आद्यादि माये त्वमजांड बीजम्
त्वमेव साकार निराकृती त्वं ।
त्वया धृताश्चाब्ज भवांड संघाः
चित्रं चरित्रं तव देवि विष्णोः ॥ ६७ ॥

ब्रह्म रुद्रादयो देवा वेदाश्चापि न शक्नुयुः ।
महिमानं तव स्तोतुं मंदोऽहं शक्नुयां कथं ॥ ६८ ॥

अंब त्वद्वत्स वाक्यानि सूक्ता सूक्तानि यानि च ।
तानि स्वीकुरु सर्वज्ञे दयालुत्वेन सादरं ॥ ६९ ॥

भवंतं शरणं गत्वा कृतार्थास्स्युः पुरातनाः ।
इति संचिंत्य मनसा त्वामहं शरणं व्रजे ॥ ७० ॥

अनंता नित्य सुखिनः त्वद्भक्ता स्त्वत्परायणाः ।
इति वेद प्रमाणाद्धि देवि त्वां शरणं व्रजे ॥ ७१ ॥

तव प्रतिज्ञा मद्भक्ता न नश्यंतीत्यपि क्वचित् ।
इति संचिंत्य संचिंत्य प्राणान् संधारयाम्यहं ॥ ७२ ॥

त्वद् अधीनस्त्वहं मातः त्वत्कृपा मयि विद्यते ।
यावत् संपूर्ण कामः स्यां तावद्देहि दयानिधे ॥ ७३ ॥

क्षणमात्रं न शक्नोमि जीवितुं त्वत् कृपां विना ।
न हि जीवंति जलजा जलं त्यक्त्वा जलाश्रयाः ॥ ७४ ॥

यथा हि पुत्र वात्सल्यात् जननी प्रस्नुत स्तनी ।
वत्सं त्वरितमागत्य संप्रीणयति वत्सला ॥ ७५ ॥

यदि स्यात्तव पुत्रोऽहं माता त्वम् यदि मामकी ।
दया पयोधर स्तन्य सुधाभि रभि शिंच मां ॥ ७६ ॥

मृग्यो न गुणलेशोऽपि मयि दोषैक मंदिरे ।
पांसूनां वृश्टि बिंदूनां दोषाणांच न मे मतिः ॥ ७७ ॥

पापिना ममहमेकाग्रो दयालूनां त्वमग्रणीः ।
दयनीयो मदन्योऽस्ति तव कोऽत्र जगत्त्रये ॥ ७८ ॥

विधिनाहं न सृष्टश्चेत् न स्यात्तव दयालुता ।
आमयो वा न सृष्टश्चेदौषधस्य वृथोदयः ॥ ७९ ॥

कृपा मदग्रजा किं ते अहं किं वा तदग्रजः ।
विचार्य देहि मे वित्तं तव देवि दयानिधे ॥ ८० ॥

माता पिता त्वं गुरुसद्गतिः श्रीः
त्वमेव संजीवन हेतु भूता ।
अन्यं न मन्ये जगदेकनाथे
त्वमेव सर्वं मम देवि सत्यं ॥ ८१ ॥

॥ हृदयबीजं ॥

॥ ओं–घ्रां–घ्रीं–घ्रूं–घ्रैं–घ्रौं–घ्रः–हुंफट् कुरु कुरु स्वाहा ॥

आद्यादि लक्ष्मीर्भव सुप्रसन्ना
विशुद्ध विज्ञान सुखैक दोग्ध्रि ।
अज्ञान हंत्री त्रिगुणातिरिक्ता
प्रज्ञान नेत्री भव सुप्रसन्ना ॥ ८२ ॥

अशेष वाग्जाड्य मलाप हंत्री
नवं नवं सुष्ठु सुवाक्य दायिनी ।
ममैव जिह्वाग्र सुरंग वर्तिनी
भव प्रसन्ना वदने च मे श्रीः ॥ ८३ ॥

समस्त संपत्सु विराजमाना
समस्त तेजस्सु विभासमाना ।
विष्णुप्रिये त्वं भव दीप्यमाना
वाग्देवता मे वदने प्रसन्ना ॥ ८४ ॥

सर्व प्रदर्शे सकलार्थदे त्वं
प्रभा सुलावण्य दया प्रदोग्ध्री ।
सुवर्णदे त्वं सुमुखी भव श्रीः
हिरण्मयी मे नयने प्रसन्ना ॥ ८५ ॥

सर्वार्थदा सर्व जगत्प्रसूतिः
सर्वेश्वरी सर्व भयापहंत्री ।
सर्वोन्नता त्वं सुमुखी च नः श्रीः
हिरण्मयी मे भव सुप्रसन्ना ॥ ८६ ॥

समस्त विघ्नौघ विनाश कारिणी
समस्त भक्तोद्धरणे विचक्षणा ।
अनंत संमोद सुख प्रदायिनी
हिरण्मयी मे नयने प्रसन्ना ॥ ८७ ॥

देवि प्रसीद दयनीयत माय मह्यं
देवाधि नाथ भव देवगणादि वंद्ये ।
मातस्तथैव भव सन्निहिता दृशोर्मे
पत्या समं मम मुखे भव सुप्रसन्ना ॥ ८८ ॥

मा वत्स भैरभयदान करोर्पितस्ते
मौळौ ममेति मयि दीन जनानुकंपे ।
मातः समर्पय मुदा करुणा कटाक्षं
मांगल्य बीजमिह नः सृज जन्म मातः ॥ ८९ ॥

॥ कंठबीजं ॥

॥ ओं–श्रां–श्रीं–श्रूं–श्रैं–श्रौं–श्रं–श्राः ॥

कटाक्ष इह कामधुक् तव मनस्तु चिंतामणिः
करः सुरतरुः सदा नवनिधिस्त्वमेवेंदिरे ।
भवेत्तव दयारसो रस रसायन चान्वहं
मुखं तव कलानिधिर्विविध वांछितार्थ प्रदं ॥ ९० ॥

यथा रस स्पर्शनतोऽयसोऽपि
सुवर्णता स्यात् कमले तथा ते ।
कटाक्ष संस्पर्शनतो जनानां
अमंगळानामपि मंगळत्वं ॥ ९१ ॥

देहीति नास्तीति वचः प्रवेशात्
भीतो रमे त्वां शरणं प्रपद्ये ।
अतः सदास्मिन्नभयप्रदा त्वं
सहैव पत्या मम सन्निधेः ॥ ९२ ॥

कल्पद्रुमेण मणिना सहिता सुरम्या
श्रीस्ते कलामयि रसेन रसायनेन ।
आस्तामतो मम च दृक्कर पाणिपाद

स्पृष्ट्या सुवर्ण वपुषः स्थिर जंगमाः स्युः ॥ ९३ ॥

आद्यादि विष्णोः स्थिरधर्मपत्नि
त्वमंब पत्या मम सन्निधेहि ।
आद्यादि लक्ष्मि त्वदनुग्रहेण
पदेपदे मे निधि दर्शनं स्यात् ॥ ९४ ॥

आद्यादि लक्ष्मीहृदयम् पठेद्यः
स राजे अलक्ष्मीं अचलां तनोति ।
महादरिद्रोऽपि भवेद्धनाढ्यः
तदन्वये श्रीः स्थिरतां प्रयाति ॥ ९५ ॥

यस्य स्मरण मात्रेण तुष्टा स्याद् विष्णु वल्लभा ।
तस्याभीष्टम् ददात्याशु तं पालयति पुत्रवत् ॥ ९६ ॥

इदं रहस्यं हृदयं सर्व काम फलप्रदं ।
जपः पंच सहस्रं तु पुरश्चरण मुच्यते ॥ ९७ ॥

त्रिकालं एक कालं वा नरो भक्ति समन्वितः ।
यः पठेत् शृणुयाद्वापि स याति परमां श्रियं ॥ ९८ ॥

महालक्ष्मीं समुद्दिश्य निशि भार्गव वासरे ।
इदं श्रीहृदयं जप्त्वा पंचवारं धनी भवेत् ॥ ९९ ॥

अनेन हृदयेनान्नं गर्भिण्या अभिमंत्रितं ।
ददाति तत्कुले पुत्रो जायते श्रीपतिः स्वयं ॥ १०० ॥

नरेणाप्यथवा नार्या लक्ष्मीहृदय मंत्रिते ।
जले पीते च तद्वंशे मंद भाग्यो न जायते ॥ १०१ ॥

य आश्वयुन्मासि च शुक्ल पक्षे
रमोत्सवे सन्निहिते च भक्त्या ।
पठेत्तथैकोत्तर वार वृद्धया
लभेत् सौवर्णमयीम् सुवृष्टिं ॥ १०२ ॥

य एक भक्त्यान्वहमेकवर्षं
विशुद्धधीः सप्तति वारजापी ।
स मंद भाग्योऽपि रमा कटाक्षाद्
भवेत् सहस्त्राक्ष शताधिकश्रीः ॥ १०३ ॥

श्री शांघ्रि भक्तिं हरिदास दास्यं
प्रसन्न मंत्रार्थ दृढैक निष्ठां ।
गुरोस्स्मृतिं निर्मल बोध बुद्धिं
प्रदेहि मातं परमं पदं श्रीः ॥ १०४ ॥

पृथ्वी पतित्वं पुरुषोत्तमत्वं
विभूति वासं विविधार्थ सिद्धिं ।
संपूर्ण कीर्तिं बहु वर्ष भोगं
प्रदेहि मे लक्ष्मि पुनः पुनस्त्वं ॥ १०५ ॥

वादार्थ सिद्धिं बहु लोक वश्यं
वयः स्थिरत्वं ललनासु भोगं ।
पात्रादि लब्धिं सकलार्थ सिद्धिं
प्रदेहि मे भार्गवि जन्म जन्मनि ॥ १०६ ॥

सुवर्ण वृद्धिं कुरु मे गृहे श्रीः
सुधान्य वृद्धिं कुरु मे गृहे श्रीः ।
कल्याण वृद्धिं कुरु मे गृहे श्रीः
विभूति वृद्धिं कुरु मे गृहे श्रीः ॥ १०७ ॥

॥ शिरोबीजं ॥

॥ ओं–यं–हं–कं–लं–वं–श्रीं ॥

ध्यायेल्लक्ष्मीं प्रहसित मुखीं कोटि बालार्क भासां
विद्युद्वर्णांबर वरधरां भूषणाढ्यां सुशोभां ।
बीजा पूरं सरसिज युगं बिभ्रतीं स्वर्ण पात्रं
भर्त्रा युक्तां मुहुरभयदा मह्यमप्यच्युतश्रीः ॥ १०८ ॥

॥ इति श्री लक्ष्मीहृदयं संपूर्णं ॥